# गुरुकवचं कङ्कालमालिनीतन्त्रे

{॥ गुरुकवचं कङ्कालमालिनीतन्त्रे ॥}

॥ अथ गुरुकवचं कङ्कालमालिनीतन्त्रे ॥

देव्युवाच ॥

भूतनाथ ! महादेव ! कवचं तस्य मे वद ।

गुरुदेवस्य देवेश ! साक्षाद्ब्रह्मस्वरूपिणः ॥ १॥

ईश्वर उवाच ॥

अथा ते कथयामीशे ! कवचं मोक्षदायकम् ।

यस्य ज्ञानं विना देवि ! न सिद्धिर्न च सद्गतिः ॥ २॥

ब्रह्मादयोऽपि गिरिजे ! सर्वत्र जयिनः स्मृताः ।

अस्य प्रसादात् सकला वेदागमपुरःसराः ॥ ३॥

कवचस्यास्य देवेशि ! ऋषिर्विष्णुरुदाहृतः ।

छन्दो विराड् देवता च गुरुदेवः स्वयं शिवः ॥ ४॥

छतुर्वर्गे ज्ञानमार्गे विनियोगः प्रकीर्त्तितः ।

सहस्रारे महापद्मे कर्पूरधवलो गुरुः ॥ ५॥

वामोरुस्थितशक्तिर्यः सर्वत्र परिरक्षतु ।
परमाख्यो गुरुः पातु शिरसं मम वल्लभे ! ॥ ६॥

परापराख्यो नासां मे परमेष्ठी मुखं सदा ।
कण्ठं मम सदा पातु प्रह्लादानन्दनाथकः ॥ ७॥

बाहू द्वौ सनकानन्दः कुमारानन्द एव च ।
वशिष्ठानन्दनाथश्च हृदयं पातु सर्वदा ॥ ८॥

क्रोधानन्दः कटिं पातु सुखानन्दः पदं मम ।
ध्यानानन्दश्च सर्वाङ्गं बोधानन्दश्च कानने ॥ ९॥

सर्वत्र गुरवः पान्तु सर्वे ईश्वररूपिणः ।
इति ते कथितं भद्रे ! कवचं परमं शिवे ! ॥ १०॥

भक्तिहीने दुराचारे दत्त्वैतन्मृत्युमाप्नुयात् ॥

अस्यैव पठनाद्देवि ! धारणात्छ्रवणात् प्रिये ! ॥ ११॥

जायते मन्त्रसिद्धिश्च किमन्यत् कथयामि ते ।
कण्ठे वा दक्षिणे बाहौ शिखायां वीरवन्दिते ! ॥ १२॥

धारणान्नाशयेत् पापं गङ्गायां कल्मषं यथा ।

इदं कवचमज्ञात्वा यदि मन्त्रं जपेत् प्रिये ! ॥ १३॥

तत् सर्वं निष्फलं कृत्वा गुरुर्याति सुनिश्चितम् ।

शिवे रुष्टे गुरुस्त्राता गुरौ रुष्टे न कश्चन ॥ १४॥

॥ इति कङ्कालमालिनीतन्त्रे गुरुकवचं समाप्तम् ॥

http://muktalib5.org

Proofread byDPD

Please send corrections to sanskrit@cheerful.com

Last updated त्oday

http://sanskritdocuments.org